*Beginning* —

श्रीगणेशाय नमः । श्रीगोपीनाथो जयति ।

नव्याम्भोदकलेवरः कटितटे सन्नद्धपीताम्बरो

वंशीवादनतत्परो व्रजरमाचेतोहरः सुन्दरः ।

राधाया प्रणयाब्धिवर्द्धनकरः केयूरराजोत्करो

नानाश्चर्य्यगुणाकरः परतरो जीयात् किशोरो वरः ॥

यस्यानुग्रहलेशतो रचयति ग्रन्थान् वालो(लो)पि स्वयं

पङ्गुर्लङ्घति पर्व्वतान्श्चिन्चियान् किंवा वदेयं पुनः ।

भक्तानन्दकरः सदातिमधुरः कारुण्यवारांनिधि

स श्रीमान् हृदि मादृशां विलसताच्चैतन्यकृष्णः स्वयं ॥२॥

श्रीरूपगोस्वामिपदारविन्दं वन्देऽनघं दीनजनैकबन्धुं ।

यस्यानुकम्पालवसाहसेन व्याख्यामिमां कर्त्तुमहं प्रवृत्तः ॥३॥

यस्यानुकम्पामवमात्रतः परं जातो गजानां पतिरेष निर्भ्रतः ।

सोयं चिदात्मा निवसेत् कदा मम चित्ते मुरारिः परमः पुरातनः ॥४॥

अथ सोयं कविमुकुटमणिः श्रीमद्धरिभक्तिनिधीनां परमभागवतानां आनन्दविशेषं सविधातुं तन्मात्यप्रयोजनकचिरकालसञ्चितनानाविद्वज्जनभावविशेषमसम्बलिततत्तत्कृतपद्यग्रन्थं चिकीर्षुः ततसगत्ये स्वयमपि कानिचित् पद्यानि विरचयन् अस्मत् परमपूज्य श्रीमद्रूपगोस्वामी आशीर्नमस्क्रिया वस्तुनिर्देशात्मकं मङ्गलमाचरति पद्यावलीति ।

It ends with a chronogram, giving the date of the composition of the commentary as Saka 1723

शाके कालायनमुनिरसनीनाथसङ्ख्ये शुभेयं

टीका विद्वज्जनहृदयमाह्लादिनी नामधेया ।

पद्यावल्या व्रजनगरस्थानावस्थितेनापि केन

श्रीमद्दामोदरचरणगन्धाभाजनेन व्यधायि ॥

---

## 5449.

## HARI-DĀSA.

### 9772 प्रस्तावरत्नाकरः । *Prastava-ratnākarah*

Substance country made paper 11 × 6¼ inches Folia, 17 Lines 16 on a page Extent in ślokas 680 Character Nagara Appearance old A fragment

Composed in Samvat 1614. See Nep Catal , p 212

An anthology treating of a variety of subjects The whole of the first chapter is taken up with a table of the subjects dealt with, and a genealogy of the author's family The subjects dealt with are as follow (1) ethics, (2) politics, (3) miscellaneous matter, (4) astronomy, (5) praise of wealth, (6) a panegyric on honest people, (7) matters relating to low and vile people, (8) the inscrutable ways of Fate, (9) reproaches to wicked people, (10) riddles, (11) piety, (12) civil manners, (13, 14) reproaches and panegyrics on womankind, (15) the utility of trees, (16) music, (17) augury, (18) palmistry, (19) dreams, (20) jugglery, and (21) astrology

The genealogy is given below —

खरागडे (खारागडे Nep Catal ) महाराज्ये करणा पुरुषोत्तम ।
आसीत् प्राज्ञ सता श्रेष्ठ कुलशीलयुत क्षती ॥
अभवस्तनयास्तस्य चत्वारो भूरितेजस ।
तेषा श्रेष्ठ कृष्णदासो गुणै श्रेष्ठस्तु सत्तम ॥
तस्यानुजौ महात्मानौ दामोदर नारायणौ ।
कनिष्ठो हरिदासोऽभूद्विप्रराजस्य सेवक ॥
ज्योति शास्त्रबृहत्कथास्मृतिकशाखाणक्यसामुद्रिकान्
ग्रन्थान शाकुनपद्धतस्वच(व)रकान् का(प)व्यादिकांश्चापरान ।
आलोच्य प्रयत मुदे मतिमता भौ(भाव)श्चै च दुष्टात्मना
विप्र गौडहरिदास एष तनुते प्रस्तावरत्नाकर ॥

जनानन्दकारी गुणाढ्यः सुशीलः
प्रियः पार्थिवानामनाथस्य नाथः ।
दयादानशीलो विवेकी विचित्रः
स एकः सुधन्यो जगन्नाथमिश्रः ॥
युगशरन्दृपमंख्ये वत्सरे मासि कोर्जे
हरितिथि रविवारे शुक्लपक्षे शुभे च ।
कृतमिदमतिशुभ्रं श्रीजगन्नाथमिश्रै-
श्चतुररसिकतुष्ट्यै राजतां पण्डितेषु ॥

*Colophon* :—

इति श्रीजगन्नाथ-मिश्रविरचिता सभातरङ्गिणी समाप्ता । अग्निवेदग्रहनिचिते माघे मास्यर्जुने पक्षे शर्व्वतिथि शुक्रवारेऽस्मिन् दिने शंखपुरिमध्ये धर्मधातुमहाविहारायः श्रीतानिव्याः पूजकवज्राचार्यरत्नानन्देनेयं सभातरङ्गिणी पुस्तकं स्वाध्यायनिमित्तये लिखितं संपूर्णमितिकृत । शुभं भूयात् सर्व्वदा ।
नमो राधासुधाधारामधुराधरधायिने ।
यशोदानन्दसन्देहदायिने भोगिशायिने ॥

## 5451.

### 888. *Sabhā-tarangah.*

Substance, country-made paper $12\frac{1}{4} \times 6\frac{1}{4}$ inches Folia, 77. Lines, 12 on a page Extent in Ślokas, 1,848 Character, Nāgara Appearance, old and repaired Complete

*Beginning* :—

नत्वा शिवं प्रथमतः प्रणिपत्य चण्डीं
वाग्देवतां तदनु तातपदं गुरूंश्च ।
संगृह्यते किमपि यत् सुजनास्तदत्र
चेतो विधातुमुचितो (?) मदनुग्रहेण ॥
राढादेशे भवत् पूर्व्वं वेदचन्द्रो द्विजाग्रणीः ।
काश्यपान्वयसज्जन्मा कुलकौमुददीपकः ॥

वेदमिश्रसुतो धीमान् लक्ष्मणाख्यो द्विजोत्तमः ।
तस्यात्मजो जगन्नाथो वेदविद्याविशारद ॥
जगन्नाथेन मिश्रेण तेनैव क्रियतेऽधुना ।
नाम्ना सभातरङ्गोऽयं सग्रह सतृसुखावह ॥
हे दुर्ज्जना, परगुणेषु भवादृशाना
द्वेष किमेष सहजो गुणतापकारी ।
या चास्ति दैन्यफलभूरिफला तदाशी
तादृग्विधस्य मिथुनस्य विमोचनाय ॥

*End* —

दन्तै प्रस्थितमग्रतश्चदनु च श्रीक्षा हत मूर्द्धजै
कर्णाभ्यामपि वागविलासरचनामाकर्णमाकर्ण्यते ।
नेत्राभ्यामपि चापल युवतिषु त्यक्त गत यौवन
सार्थेऽस्मिन् चलिते कथ पुनरह यातोस्मि तच्चिन्तयेत् ॥
जनानन्दशायी सुशीलो गुणज्ञ
प्रिय पार्थिवानामनाथस्य नाथ ।
दयादानशीलो विवेकी विचित्र
स एवैष शर्म्मे जगन्नाथमिश्र ॥
युगशरन्दमसङ्ख्ये (१६५२) वत्सरे मासचोर्ग्ये
हरतिथिरविवारे शुक्लपक्षे कृते वा ।
कृतमिदमतिशुभ्र श्रीजगन्नाथमिश्रे
चतुररसिकतुष्ट्यै राजता पण्डितेषु ॥

*Colophon* —

इति श्रीसभातरङ्गे जगन्नाथमिश्रविरचिते पञ्चाशीतितम परिच्छेद ।

*Post Colophon* —

रामाय नम ।

अथ महता प्रयत्ना 2B, इति श्रीजगन्नाथविरचिते सभातरङ्गे सुजनवर्णन प्रथम परिच्छेद ।

अथ दुर्ज्जनप्रशंसा, 7B,

10B, इति श्रीसभातरङ्गे दुर्ज्जनप्रशंसा नाम द्वितीय परिच्छेद , 13A, चातकान्योक्ति ३य परिच्छेद , 15A, भ्रमरान्योक्ति ४; 15B, श्वाल्मत्स्य-न्योक्ति ५ , 16B, इति शुकान्योक्ति ६ , 17A, सद्वृक्षान्योक्ति ७ , 18A, कोकिलान्योक्ति ८, 19A, वकान्योक्ति ९ , 19B, हंसा न्योक्तय १० , 20A, दानप्रशंसा ११ , 21A, काकान्योक्तय १२ , 22A, गजान्योक्ति १३ , 22B, सिंहान्योक्ति १४ , 23B, मृगान्योक्ति १५ , 24A, चन्दनान्योक्ति १६ , 24B, कस्तूर्य्यन्योक्ति १७ , 25A, वर्व्वूरान्योक्ति १८ , 26A, सद्वृक्षान्योक्ति १९ , 26B, देशपरित्याग २० , 27A, खद्योतान्योक्ति २१ , 27B, चन्द्रान्योक्ति २२ 28A, जलान्योक्ति २३ , 28B, मेघान्योक्ति २४ , 29A, कमलान्योक्ति २५ , 29B, पर्व्वतान्योक्ति २६ , 29B, मैत्रीभङ्ग २७ , 30A, सेवकनिन्दा २८ , 30A, तृष्णा २९ , 30A, अहङ्कार ३० , 30B, अथ स्थानप्रधानम ३१ , 31A, स्त्रीपरित्याग ३२ , 31A, उत्तमस्त्री ३३ , 31B, नद्यन्योक्ति ३४ , गर्व्वपरिहार ३५ , 32A, तेजस्विप्रशंसा ३६ , 33B, धनप्रशंसा ३७ 35A, सञ्चय निषेध ३८ , 36B, निर्धनवर्णन ३९ , 36B, याचकप्रशंसा ४० , 37A, आपत्तकालमित्रप्रशंसा ४१ 37B, सेवानिन्दा ४२ 37B, लक्ष्मी स्वभाववर्णनम ४३ , 38B, भोजराज-श्लोका ४४ , 38B, शिवस्य ४५ , 39A, रामचन्द्रस्य ४६ , 39B, दुर्गाया ४७ , 42A, विष्णो ४८ 43B, शिवस्य ४९ 44A, गणेशस्य ५० 45A, कीर्त्तिवर्णन ५१ , 45B, प्रतापस्य ५२ , सङ्ग्रामस्य ५३ , 46A, इष्टदर्शनम् ५४ , 46A, केतक्या ५५ , 47B, भाविवर्णनम ५६ 48A, विद्याधिकारा ५७ , 49B, मूर्खप्रशंसा ५८ (५७) 55A, मिश्रश्लोका ५९ , 55A, स्नेहवर्णनम् ६० , 56A, विवाहानन्तर वरस्य पितु विज्ञप्ति ६१ , 61B, धनदानप्रशंसा ६२ , सत्सङ्गदोष ६३ , द्वारि प्रविष्टो वर पठति ६४ , 62A, इति दातृगृहे श्लोकपाठ ६५ , 62B, समुद्रायामापद्वर्ण (?) ६६ , 63A, समुद्रान्योक्ति ६७ , मद्दतसङ्कृति ६८ , 63B, निकटस्थिति ६९ 63B, वृषभान्योक्ति ७० , परगृहगमनागमनप्रशंसा ७१ , 63B, स्त्रीरूपवर्णनम ७२ , 64B,

वादवर्णनम ७३, 65A, सूर्यवर्णनम् ७४, 65B, पुरुषस्य पलचिह्नानि ७५, 67A, इति वीरप्रशसा ७६, 67B, बह्नीकारवर्णनम् ७७, 68A, दुष्टाना मानप्रशसा ७८, 68B, मालयन्योक्ति ७९, कायस्थाना प्रशसा ८०, 69A, वैद्यप्रशसा ८१, वैरागिवर्णनम् ८२, विधवावर्णनम ८३, 71A, राज्ञा पत्रप्रशस्ति ८४, 72A, ब्राह्मणप्रशस्ति, 75A, सुभाषितम ८५, 76B, युद्धविधि, 77A, बह्वोद्दिष्टी प्रकीर्णकम्।

In section 84, mention is made of Mukunda deva, the last independent Gajapati King of Orissa and his successor Ram candra

---

## 5452.

## ANONYMOUS.

6005 **सभ्याभरणम्।** *Sabhyabharanam*

*With the commentary entitled Rasmi-mala by Govinda, son of Nila kantha*

Substance country made paper 9×4 inches Folia 32 Lines 9 on a page Extent in slokas 580 Character Nagara of the eighteenth century Appearance discoloured

Sabhyabharana, a collection of verses to be used in a learned assembly

The present manuscript contains only the second ullasa, devoted to compliments to the learned

*It begins thus* —

Commentary श्रीगणेशाय नम ।

गणेश नीलकण्ठ च नत्वा गोविन्ददैवविद् ।

सतप्रशंसाख्यमुल्लास व्याकरोति सतां मुदे ।

अथ विद्वत्प्रशसा वर्णयितुकाम ग्रन्थकृत + + + +

विद्वद्वृन्दमनुष्टुभा नमति ।

Text वह्निसखामिव श्रेष्ठा सभाकारानुरूपिणीम ।

प्रत्येककान्तिकलिता सुमस्ता समद सभाम ॥

The second ullāsa consists of 26 slokas. The commentary gives exhaustive explanations.

*The commentary ends* :—

ज्योतिर्विदर-नीलकण्ठ-विदुष श्रीचन्द्रिकायास्तथा
पुत्रेणाद्विगवीप्रसारितधिया गोविन्दनाम्ना कृते ।
श्रीसभ्याभरणस्य सूत्रसखदेऽन्ये रश्मिमालाभिधे
व्याख्याने प्रश्निभृत्पुरीवसतिनोल्लासो द्वितीयोऽगमत् ॥

*Colophon* ·—

इति श्रीमद्दिद्देवचमुकुटहीरनीलकण्ठज्योतिर्वित्सुतगोविन्द-ज्योतिर्विद्विरचिताया सभ्याभरणटीकाया रश्मिमालाभिधायां साधुप्रश्नसानामको द्वितीयोल्लास· समाप्तिमगमत् ।

---

## 5453.

## KRSNA BHATTA HOSANGA.

8163 **दुष्टदमनकाव्यम्** । *Dusta-damana-kāvyam.*

*By Krsna Bhatta Hosanga, son of Rāmeśvara Bhatta.*

Substance foolscap paper 10×5 inches Folia, 39 Lines 7 on a page Character, modern Nagara Appearance fresh

A mere fragment, containing the 3rd canto only.

An anthology, directed against hypocrites of all classes and of all sorts This canto contains 94 verses only, many of which are profusely commented upon

*Writers mentioned* ·—

3B, गोवर्द्धनोपि ; 12A, गोवर्द्धनोपि , 13B, कालिदासोपि , 15A, काव्यप्रकाशटीकायामस्मद्गुरुमिश्रश्रीन्द्रमिश्रठक्कुरै ; 12A, उक्तञ्च कृष्णमिश्रै पाखण्डविडम्बनाङ्के ; 28B, अत्रार्थे श्रीरुद्रभट्टाचार्याणां पद्यम् ।

*Colophon* :—

इति श्रीहोसिंगोपनामकरामेश्वरभट्टसूरिसूनुकृष्णभट्टविरचिते दुष्टदमनाख्यकाव्ये पण्डिताभासादिखरूपक नाम तृतीय सर्ग ॥ ३ ॥

*Post Colophon* :—

अविचार्य्य शतं यावत् प्राञ्चिकं कर्म्मधार्मिकं ।
तदनिष्टं परित्याज्यमिति ह्योसिंगडिंडिभः ॥ १ ॥
यदि कोपो भवेन्नैव नैव कश्चिद्दुराग्रहः ।
यदि वा धर्म्मसंलिप्सा तदा वर्त्तितव्यान्यथा ॥
स्वीया वा परकीया वा ह्योसिंगादपरे बुधाः ।
नामसिद्धौ न वानर्थनिरत्यै प्रभवन्त्यपि ॥ ३ ॥
प्रशस्तमार्गेण यो मान्यो ब्रूयान्मान्यतमोमि (?) ।
अन्यथा विप्रवाक्यस्य शिरश्छेदो विधीयते ॥
मालवीय-रघुनाथप्रसादस्येदं पुस्तकं ।

---

## 5454.

## ANONYMOUS.

### 10566. सुभाषितसारसमुच्चयः पूर्व्वार्द्धः ।

*Subhāṣita-sāra-samuccayaḥ (1st half).*

Substance, country made paper $10\frac{1}{4} \times 5$ inches Folia, 2-64 Lines, 11 on a page Extent in ślokas, 1,600 Character, Nāgara of the eighteenth century Appearance, discoloured

*Colophon* :—

इति श्रीसुभाषितसारसमुच्चयः पूर्व्वार्द्धः ।

It quotes Akavari Kālidāsa and Kṛṣṇa Paṇḍita.

*Names of poets* :—

2A, भानुकरस्य, गणपतेः; 2B, लक्ष्मणस्य; 3A, कृष्णपण्डितानाम भट्टस्य कृतौ; 3B, वषट्कारप्राज्ञिणाम्, 4A, विश्वम्भरभट्टस्य; काशीपतेः; *4B*, बालाजीभट्टस्य; *5A*, कुवलयानन्दात्, कल्लटस्य; *5B*, कमलाकरस्य, जयमाधवस्य, माघकवेः, काशीपतेः, गौर्य्याः, 6A, भवभूतेः, मोहनस्य, भानुकरस्य, लक्ष्मणस्य; 6B, जयमाधवस्य, रामचन्द्रागमिनः, सदाशिवस्य, वेणीदत्तस्य; 7A, गणपतेः, पद्मवेणीकारस्य, कालिदासस्य, राजशेखरस्य, रामजीकस्य; 7B, कालिदासस्य, विक्र[म]स्य, 8A, नायकुमारस्य, विक्रमस्य, रामचन्द्रागमिन, सदाशिवस्य, मधुसूदनस्वामिनाम्; 8B, वेणीदत्तस्य, गुणा-

करस्य, 9A, भोजचम्पूत, मुरारे, उद्दीपककवे, 9B, गोपादित्यस्य, छायापण्डितस्य, जयदेवस्य, रामजित, 10A, ब्रह्मेन्द्रस्वामिनाम्, वैणीदत्तस्य, रामकवे, त्रिविक्रमस्य, 11A, दामोदरस्य, गुल्लरकवे, रत्नाकरस्य, 11B, उद्दामभानो, 13A, गोविन्दस्वामिन, विकटनितम्बायास्य, 13B, नारायणभट्टस्य श्रीपतिभट्टस्य, माघवस्य, 15B, चिन्तामणे, 16A, माधवभट्टस्य कालिदासा कवरीकालिदासयो, 16B, वाल्मीकस्य शार्ङ्गधरस्य, 17A, त्रिविक्रमभट्टस्य, 17B, नागेशशास्त्रिणाम्, 18A, वेणीपाण्डेयकानाम्, 18B, त्रिलोचन त्रिवाडीकस्य, 19A, विन्दुकवे, भोजप्रबन्धात चन्द्रचूडस्य, कविकङ्कणस्य, 19B, बालमुकुन्दानाम्, 20A, भासस्य गदाधरस्य, 20B, कोलिम्बराजस्य, 21A, भट्टवीजस्य, कपिलरुद्रस्य श्रीहर्षस्य, 22B, मयूरकर्त्तु, 23A, शिवभक्तस्य, अकब्बरीकालिदासस्य, 24A, भोजदेवस्य धाराकदेवस्य, क्षेमेन्द्रस्य, 25A, पद्मावत्या, वाणभट्टस्य, 26B, गोवर्द्धनस्य विन्दो, 27A, विश्वनाथस्य, सूक्ति सहस्रात, पाणिने, 27B, मदालसाया, कूर्म्माचलस्य, 28A, रामचन्द्रस्य, रघुपते. 28B, छायापिल्लस्य 29A, भर्त्तृहरे दुर्गसिंनस्य जीवनागस्य, 29B, विद्यापते, 30B, कुमारदासस्य प्रबोधभाज, 31A, अभिनन्दस्य, 33A, भट्टस्य, 33B, श्वेताम्बरश्रीचन्दनस्य 37B, मोरिकाया भल्लाटस्य मोहनस्य, 39A, धनिकस्य हनूमत 39B, दोलंतिकाभीमस्य, 41A, गोविन्ददेवस्य, 44A, हरिहरस्य, 46A, वीजाङ्करस्य शिवस्वामिन 47B, सोमकवे, 48B, चन्द्रस्य 49A, शीलाभट्टारिकाया हरगणस्य, 50A, भीमस्य, 51A, कविराजस्य 53A, वतमराजस्य, 55B, कुमारभट्टस्य, 60B, घनश्यामस्य, 61A, विधूदयस्य रामकवे।

*Topics —*

2B, अथ प्रभातवायु, 4A, अथ मध्याह्न, 5A, जलकेलि, 6B, अथ कन्दुकक्रीडा, 8A, अथ भमरीक्रीडा, 8B, अथ दृङ्मीलनक्रीडा, 9A, अथ द्यूतक्रीडा, 9B, अथ सूर्य्यास्तम. 10B, अथ चक्रवाकावस्थाख्यानम, 12A, अथ अभिसारिकामन्द्वारकथनम, 14B, अथ चन्द्रोदयवर्णनम्, 16A, अथ पथिकवधूदहन, 18B, अथ सकलङ्कचन्द्र, 20A, हर्म्मास, 20B, अथ वमन्त, 21B, अथ वसन्तवायुवर्णनम, 23A, अथ वसन्तविरहिणी, 23B,

अथ ग्रीष्मसमयस्वभावाख्यानम् ; 24B, अथ ग्रीष्मवायवः ; 25B, अथ ग्रीष्मपथिकः ; 26A, अथ ग्रीष्मविरहिणी ; 26B, अथ वर्षावर्णनम् ; 27A, अथ मेघवर्णनम् ; 27B, अथ मेघगर्ज्जितम् ; अथ विद्युद्वर्णनम् ; 28A, अथ वृष्ट्याः ; अथ खद्योत', अथ इन्द्रगोपाः ; 28B, अथ वर्षावायुः, अथ पान्थवर्णनम् ; 29B, अथ वर्षापथिककामिनी ; 30B, अथ शरत्समयस्वभावाख्यानम् ; 31A, अथ शरद्वायवः, अथ शरत्पान्थ· ; 31B, अथ शरद्विरहिणी ; 33B, अथ शिशिरसमयस्वभावाख्यानम् ; 34B, अथ पथिक', 37A, अथ विरहिणीप्रस्थानम् ; 45A, अथ नायिका प्रति नायकावस्थाकथनम्, अथ दम्पत्योः परस्परपत्रलेखनम् ; 45B, अथ हृत्यपहासः, 46B, अथ नायिकावलोकनम् ; 47A, अथ नायकदर्शनम् ; 48B, अथ नायकशिक्षा ; 50A, अथ मानिनीमानः ; 52B, अथ सुरतप्रशंसा ; 53A, अथ सुरतानि ; 56A, अथ रतावसानम् ; 57B, अथ सम्भोगाविष्करणम् ; 58B, अथ शृङ्गार आदौ निरूप्यते, अथ बालावर्णनम् ।

## 5455.
## ANONYMOUS.

### 3919 सुभाषित-रत्नाकरः । *Subhasita-ratnākarah.*

Substance, palm leaf 13 × 1½ inches Folia with leaf marks 3 to 41 with the 5th missing Folia, without leaf marks are the following — (I) broken at both ends and written in a bolder hand on one side only, (II) broken on the left side written in the same hand as the rest of the MS and on one side only, containing verses 4 to 8, (it is supposed these two together form the first leaf of the manuscript unless the first leaf is rejected altogether), (III) broken at the right hand side, containing the Sankara brajyā, written on both sides (*This is supposed to be the second leaf*), (IV) broken on the right side written on both sides, containing Sarasvatibrajyā, put at the end, the place being uncertain, (V) broken on the right side written on one side only, containing Gaja brajyā, supposed to be the *last leaf of an incomplete work* Lines, 4, 5 on a page Character, Bengali of the early seventeenth century Appearance, old and discoloured

*The name of the work* :—The leaf supposed to be the reverse of the first leaf contains the following .—

\+ + + परितो येषां सुधा वर्तते ।
ते सन्तो विहरन्तु सन्ततममुष्मिन्नेव रत्नाकरे । ८ ।
सुभाषितानि रत्नानि + + +

Introduction in nine verses
शृङ्गारव्रज्या in 18 verses ending in the 27th verse
गौरीव्रज्या in 2 verses ending in the 29th verse
गौरीव्रज्या in 5 verses ending in the 34th verse
विष्णुव्रज्या end lost in the missing leaf
दशावतारव्रज्या in 10 verses ending in the 55th verse
सूर्य्यव्रज्या in 10 verses ending in the 65th verse
चन्द्रव्रज्या in 26 verses ending in the verse 91 marked 92
in the MS
चन्द्र सूर्य्यव्रज्या in 4 verses ending in the 96th verse
वायुव्रज्या in 2 verses ending in the 98th verse marked 92
in the MS
कल्पतरुव्रज्या in 7 verses ending in the 105th verse
(?)जलधरव्रज्या in 32 verses ending in the 137th verse
देवव्रज्या in 11 verses ending in the 148th verse marked
in the MS 147
ग्रहव्रज्या in 3 verses ending in the 150th verse
प्रदीपव्रज्या in 2 verses ending in the 152nd verse
सुजनव्रज्या in 11 verses ending in the 163rd verse
दुर्जनव्रज्या in 10 verses ending in the 173rd verse
सुजन दुर्जनव्रज्या in 4 verses ending in the 177th verse
गुणिव्रज्या in 10 verses of which two are not found, ends
in the verse marked in the manuscript 184 (?)
पामरव्रज्या in 7 verses ending in the verse marked 189 (?)
धनिव्रज्या in 3 verses ending in the verse marked 195 (?)
दरिद्रव्रज्या in 3 verses ending in the verse marked 196 (?)
वीरव्रज्या in 3 verses ending in the verse marked 196 (?)
स्त्रीव्रज्या in 28 verses ending in the verse marked 226 (?)
अलङ्कारव्रज्या in 6 verses ending in the verse marked 232
सुवर्णव्रज्या in 6 verses ending in the verse marked 238
मृगमदव्रज्या in 2 verses ending in the verse marked 240
निधिव्रज्या in 14 verses ending in the verse marked 254
अगुरुव्रज्या in 3 verses ending in the verse marked 257
चन्दनव्रज्या in 15 verses ending in the verse marked 272

श्रीफलव्रज्या in 3 verses ending in the verse marked 275
चूतव्रज्या in 13 verses ending in the verse marked 288
पनसव्रज्या in 3 verses ending in the verse marked 291
बदरीव्रज्या in 2 verses ending in the verse marked 293
अशोकव्रज्या in 6 verses ending in the verse marked 299
किंशुकव्रज्या in 3 verses ending in the verse marked 302
अश्वत्थव्रज्या in 4 verses ending in the verse marked 306
वटव्रज्या in 2 verses ending in the verse marked 308
शाल्मलीव्रज्या in 7 verses ending in the verse marked 315
निम्बतरुव्रज्या in 2 verses ending in the verse marked 317
सामान्यतरुव्रज्या in 6 verses ending in the verse marked 323
मार्गतरुव्रज्या in 6 verses ending in the verse marked 329
मरुतरुव्रज्या in 6 verses ending in the verse marked 333
नारिकेलव्रज्या in 2 verses ending in the verse marked 335
इक्षुव्रज्या in 2 verses ending in the verse marked 337
कदलीव्रज्या in 3 verses ending in the verse marked 340
वंशव्रज्या in 3 verses ending in the verse marked 343
सरभव्रज्या in 4 verses ending in the verse marked 347
हंसव्रज्या in 8 verses no end
सरस्वतीव्रज्या in one of the broken leaves
गजव्रज्या in another broken leaf, written on one side only

Subhasita ratnakara (?) as published by Krsna Sastri Bhatavadekar, seems to be based upon the present work

---

## 5456.

## SIVA-RĀMA TRI-PĀTHĪ

### 1171. नृपविलासः । *Nrpa vilasah*

Substance country made paper 10 × 1½ inches Fol a 11 Lines 8 on a page Extent in ślokas 220 Character Nagara Appearance new *Complete*

Written for the benefit of the author's friend Kesavarama

The author is the son of Kṛṣna-rama and grand-son of Triloka candra

*Beginning* —

> रमाकपी शङ्खधरौ शितिचन्द्रांशशोभितौ ।
> विनायकयुतौ नागयुतौ स्ता व सुखप्रदौ ॥
> कार्त्तवीर्य्ये दशग्रीवे प्रलम्बे प्रबलेऽसुरे ।
> राजन् राम इवारातावेधि शम्भुरिवान्धके ॥

*It ends thus* —

> त्रिलोकचन्द्रात्मजकृष्णरामसूनुस्त्रिपाठी शिवरामनामा ।
> वन्धोर्मुदे केशवरामनाम्नश्चक्रे निबन्ध नृपतेर्विलासम् ॥

*Colophon* —

> इति श्रीशिवरामकृतौ नृपविलास ।

*Post Colophon* —

> वैशाखशुक्लपक्षे द्वादश्या मङ्गर श्रीरामचन्द्र ॥

Nineteen verses आर्शो forty nine verses स्तुति, four verses सभा, twenty-eight verses चित्रजाति, two verses सौधम्, one वापिका, one जलक्रीडा, one वेश्या, three रति, one विपरीतरति, one चन्द्रिकाविहार, one स्त्रीव्यनुराग, three वाटिका, three सामान्यदेश, thirty प्रजा, two अश्व, two गज, one खड्ग one धनु, one केतु, one शिबिका, one पुर, one गज, one धूलि, one प्रस्थानम, one युद्धाध्वर, one द्वन्द्वयुद्धम्, one सन्धिपलायनम्, one रणभूमि' ।

After the colophon and before the post colophon the following verses are written on the margin —

> विद्याविलास इनपूर्वशरत्फलाद्या
> काव्यानि पञ्च तुतयोपि च पञ्चसङ्ख्या ।
> टीकाश्च + + श्चैक उनादिकोष
> भूपालभूषणमथो रसरत्नराशे ॥
> ग्रन्थान मया विरचितान् परिशीलयन्तु
> शीलान्विता सुमनसो[मनसो]मुदे मे ।

यद् वह्निशोधितमनल्पदशा समेत
शाम्बून[द] भवति मूल्यविशेषलभ्यम् ॥

---

## 5457.

## ŚRĪ-DHARA.

### 10361 श्लोकसंग्रहः । Śloka-saṃgrahaḥ.

Substance country made paper 10 × 4 inches. Folia 7 Lines 19 on a page Extent in ślokas 400 Character Nāgara of the nineteenth century Appearance fresh Complete

*Colophon* —

इति श्रीमालवीय वासुदेवात्मज श्रीधरसगृहीत श्लोकसग्रह समाप्त ॥

*Beginning* —

योसौ विघ्नविनाशनो गजमुख सर्व्वार्थसिद्धिप्रद
यो विद्याधरसिद्धकिन्नरगणै सस्तूयमानो ध्रुवम् ।
यो विघ्न हरते स्मृतोपि सतत यो बुद्धिद सर्व्वदा
श्रीगौर्य + + + द्भवो हरसुतो लम्बोदर पातु व ॥

---

## 5458.

## VIṬHṬHALEŚA.

### 10362 Śloka-saṃgrahaḥ

Substance country made paper 10 × 4 inches Folia 4 Lines 13 on a page *Extent in ślokas 144 Character Nagara of the nineteenth century* Appearance fresh. Complete

*Colophon* —

इति श्रीश्लोकसग्रह विट्ठलेशकृत समाप्त ।

*Beginning* —

श्रीगणेशाय नम ।
रवे कवे कि समरस्य सार
कृषेर्भय कि किमदन्ति भृङ्गा ।, etc

## 5459.

## MAHĀ-KAVI BHAṬṬA.

### 8464. पद्यसंग्रहः । *Padya-saṃgrahah.*

Substance, country-made paper  $7\frac{3}{4}\times4$ inches  Folia, 3  Lines, 9 on *a page*  *Character, modern Nāgara*  *Appearance, fresh*

The mangala-carana and the object of the work.

अथ पद्यसंग्रहप्रारम्भः ।

नत्वा तां परमेश्वरीं शिवकरीं श्रीभारतीं भास्वतीं
गङ्गातीरनिवासिना सुकविना लोकोपकारार्थिना ।
नानापण्डितवक्त्रनिर्गतवता निर्मीयते केनचित्
पद्यानामिह संग्रहोऽमृतकथाप्रस्तावविस्तारिणाम् ॥

काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुः
दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः ।
कासारेऽपि विकासिपङ्कजचये खेलन्मराले पुनः
क्रौञ्चश्चञ्चुपुटेन कुञ्चिततनुः शम्बूकमन्विष्यते ॥ २ ॥

There are 20 ślokas only. This is not the same as described in L 706.

*Colophon* :—

इति श्रीमहाकविभट्टकृतः पद्यसंग्रहः समाप्तः ।

*Post Colophon* :—

संवत् १९९१ पौ. सु. ५ भौ० लि० रघुनाथ-मालवीय काश्यां गोघट्टतटे ।

---

## 5460.

## ANONYMOUS.

### 11230. *Śloka-saṃgrahah.*

Substance, country made paper  $9\frac{1}{4}\times4\frac{1}{4}$ inches  Folia, 11  Lines, 9 on a page. Character, modern Nāgara  Appearance, fresh  Incomplete at the end

*Beginning* —

ॐ श्रीगणेशाय नम ।

धर्म्मः सर्व्वसुखाकरो हितकरो धर्म्मं बुधाश्चिन्वते
धर्म्मेणैव समाप्यते शिवसुख धर्म्माय तस्मै नम ।
धर्म्मान्नास्त्यपरः सुहृद्भवभृता धर्म्मोहि मूल सता
धर्म्मे चित्तमह दधे प्रतिदिन हे धर्म्म मां पालय ॥ १ ॥

*Topics* —

2A, इति धर्म्मपद्धति , 2B, इति गुरुपद्धति , 4B, इति विद्यापद्धति , 5A, इति ज्ञानपद्धति , 5B, इति आचारपद्धति , 6A, इति चतुर्गतिलक्षण पद्धति , 6B, इति वाक्यपद्धति , 7B, इत्युद्यमपद्धति , 8B, क्रोधपद्धति , 10A, इति सज्जनपद्धति , 10B, इति मद्य , इति वेश्या , 11A, इति परस्त्री , इति व्यसनपद्धति ।

---

## 5461

## BĀBĀ KĀŚĪNANDA

### 10022 *Śloka samgrahah*

Substance blue foolscap paper 12½ × 5¾ inches. Folia 88–115 Lines 11 on a page Character modern Nagara Appearance fresh

A very modern compilation

*Beginning* —

श्लोकसग्रहो लिख्यते ।

गुरु देव नमस्कृत्य परमानन्दविग्रहम् ।
मया वै काशीनन्देन क्रियते श्लोकसग्रह ॥
जले तैल खले गुह्य पात्रे दान मनागपि ।
प्राज्ञे शास्त्र स्वय याति विस्तार वस्तुशक्तित ॥ १ ॥

94A, *राधिकासखीवर्णन समाप्त। अथ भोजप्रबन्धमिषेण श्लोकान्* कथयामि ।

111A, इति श्रीबाबाकाशीनन्देन भाजचरित्रमिषेण कृत श्लोकसग्रह समाप्त ।

सवत् १९२३ ज्येष्ठ पुरुषोत्तममासे ११ एकादश्यां शनिवासरे लिखित भैरो पाठक ।

श्रीगणेशाय नमः । अथ श्रीधरकारिकाणां संग्रह क्रियते ।

जयजयाजितजह्यगजंगमावृतिमजामुपनीतमृषागुणा ।

नहि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता(न)तव ॥

112B, इति श्रीभागवते वेदस्तुतौ श्रीधरस्वामिकृतकारिकाणां श्लोकसंग्रहमिषेण संग्रह कृतवानस्माक बाबा काशीनन्दः ।

परमात्मानमानम्य परमानन्दविग्रहम् ।

सज्ज्ञानप्राप्तये नृणां कुर्वे सम्रीतिसंग्रहम् ॥

*End* :—

इति श्रीश्लोकसंग्रह समाप्त ।

बालानां सुखबोधाय संग्रहोय मया कृत ।

काशीपूर्व्वकनन्देन साधुषु ख्यातकीर्त्तिना ॥ १ ॥

मत्कृतं संग्रह दृष्ट्वा क्षमा कुर्व्वन्तु सज्जना ।

शोधनीय विशेषेण यदत्र स्खलितं मम ॥

संवत्सरे विक्रमादित्यराज्यात् १९२३ ज्येष्ठमासे शुक्लापक्षे तृतीयायां शुक्रवासरे काशीपुर्य्यां धर्म्मेश्वरसमीपे समाप्तिमगात् ग्रन्थोय ।

## 5462.

## 10858. पद्यामृततरङ्गिणी-टीका (सोपानरचना) ।

*Padyāmrta-tarangini-tīkā. (Sopāna-racanā)*

*By Jaya-rāma.*

Substance, country made paper 9 x 4 inches Folia, 2-5 Lines, 10 on a page Character, Nagara of the eighteenth century Appearance, discoloured A fragment

2A, इति श्रीमदभिहोत्रिकुलतिलकायमानश्रीभास्करसूरिसूनुश्रीमदात्मारामानुजश्रीजयरामकृतायां पद्यामृततरङ्गिणी-सोपानरचनायां पञ्चमतरङ्गसोपानम् ।

Aufrecht ascribes the text to Hari-bhaskara

## 5463.

## ANONYMOUS.

10363. **सुभाषितमुक्तावली ।** *Subhāṣitā-muktāvalī.*

*Collection of verses.*

Substance, country made paper. 10 × 4½ inches Folia, 10–33 Lines, 14 on a page Character, Nāgara of the nineteenth century Appearance, discoloured

On the left hand upper margin of every leaf (A), it is called मुक्तावली ।

On the reverse of the last leaf the name is: सुभाषित मुक्तावली ।

---

## 5464.

## MUKUNDA PAṆḌITA.

9785. **पद्यमुक्तावली ।** *Padya-muktāvalī.*

Substance, country made paper 11 × 6 inches Folia, 34 Lines, 11, 14 on a page Extent in ślokas, 1,000 Character, Nāgara Appearance, tolerable Incomplete In two different handwritings

A collection of miscellaneous verses, mostly erotic. The MS. is incomplete at the end Compiled by Mukunda Paṇḍita, son of Tryambaka Paṇḍita.

*It begins:—*

श्रीगणेशाय नमः ।

गौरीलोचनचन्द्रिका तनुभृता कारुण्यकल्लोलिनी
दुःखध्वान्तयुगान्तसौरपटली विश्वेन्द्रजालौषधी ।
गुञ्जद्विष्णुविरिञ्चिमुख्यदिविषद्रोलम्बपद्माटवी
माया कापि पुनातु कौतुककरी दैगम्बरी नः सदा ॥
नत्वा शाम्भसदाशिवाङ्घ्रियुगलं निर्मूलनं [सं]सृते-
पुण्यस्तम्भजुषा मुकुन्दविदुषा लीलावशात् कापन ।
श्रीमत्त्र्यम्बकपण्डितात्मजनुषा मत्पद्यमुक्तावली
मात्मर्योस्थितविन्दुवृन्दहृदयानन्दाय संगृह्यते (?) ।

अथ नमस्कृति ।

उत्फुल्लामलकोमलो + + + + श्यामाय रामाय न ।
कामाय प्रथमाननिर्म्मलगुणग्रामाय रामात्मने ॥
योगारूढमुनीन्द्रमानससरोहंसाय संसारवि-
ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥
पाकं यत्र विशेषतो निगदितुं प्रेमैव यच्चिन्तितं
मदङ्गीवदनेन्दुमण्डलमिव स्वान्ते विधत्ते मुदं ।
यन्मुग्धा नयनान्तचेष्टितमिवाध्यच्चेपि नो लक्षितं
तत्तेजो विनयादमन्दहृदयानन्दाय वन्दामहे ॥

अथाशिषः ।

कनकनिकषभासा सीतयालिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णाभिरामः ।
अभिनव इव विद्युन्मण्डितो मेघखण्ड
शमयतु मम तापं सर्व्वतो रामचन्द्रः ॥ इत्यादि ।

This is to be differentiated from a work of the same name which, Aufrecht thinks, was composed by Ghāsi-rāma and quoted in his Rasa candra in 1696

---

## 5465.

## BRAJA-NĀTHA

### 9773 पद्यतरङ्गिणी । *Padya-tarangini*

Substance country made paper 14 × 5½ inches Fol a 10 Lines 11 on a page Extent in slokas 300 Character Nagara Appearance tolerable

An incomplete MS of पद्यतरङ्गिणी, comprising the first eight tarangas, and 51 verses of the ninth Padya-tarangini is an anthology in twelve tarangas It gives a table of contents, which are as follows (1) panegyric on good men, (2) praise of men endowed with good qualities, (3) praise of the learned, (4) praise of Lakṣmī, (5) praise of

donors, (6) praise of friends, (7) the inscrutable ways of Providence, (8) manly efforts, (9) censure of the ignorant, unlucky, avaricious and wicked people, (10) niti, (11) miscellaneous matters, and (12) understanding the real object of what others say

*It begins thus* —

ॐ स्वस्ति श्रीगणेशाय नम ।

नवनीलनीरदसमानरोचिषे कुसुमायुधातिकमनीयरोचिषे ।

तडिदम्बराय महते फलाय ते निगमान्तवेद्यवपुषे नमो नम ॥ १ ॥

सर्व्वान प्रबन्धानालोच्य विदुषां तोषहेतवे ।

कृतेय व्रजनाथेन रम्या पद्यतरङ्गिणी ॥ २ ॥

सज्जनाना प्रशसात्र प्रशसा गुणिना तथा ।

विदुषाञ्चैव लक्ष्मीशाञ्च प्रशसा दातुरेव च ॥ ३ ॥

मित्रस्य च प्रशसात्र दैवाख्यानमत पर ।

उद्यमाख्यानमप्यत्र तथा निन्दातरङ्गके ॥ ४ ॥

मूर्खदुर्ज्जनलुब्धाना दुर्गतस्य च निन्दनम ।

नीति प्रकीर्णकाख्यानमन्योक्तिश्च समासत ॥ ५ ॥

अन्योक्तीनामभिप्रायसूचनञ्च समासत ।

तरङ्गा द्वादशैवात्र तरङ्गिण्यामुदाहृता ॥ ६ ॥

विस्तृतानेकसन्दर्भालोकनायासमुक्तये ।

मुदे सहृदयानाञ्च प्रयत्नोऽय ममात्र हि ॥ ७ ॥

तत्रादौ सज्जनप्रशसा उपचरितव्या । इत्यादि ।

## 5466.

8243 *Subhasita ratna-bhandara (Extracts from)*

Substance country made paper 9 x 4½ inches Folia 3 Lines 8 on a page, Character modern Nagara Date Samvat 1956 Appearance fresh

Two extracts from Subhasita ratna bhandara—one on tobacco and the other on Tamala, with explanations of difficult words

अथ नमस्कृति ।

उत्फुल्लामलकोमलो + + + + श्यामाय रामाय न ।
कामाय प्रथमाननिर्म्मलगुणग्रामाय रामात्मने ॥
योगारूढमुनीन्द्रमानससरोहंसाय संसारवि
ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥
शक्यं यन्न विशेषतो निगदितु प्रेमेव यच्चिन्तित
मदङ्गीवदनेन्दुमण्डलमिव स्वान्ते विधत्ते मुदं ।
यन्मुग्धा नयनान्तचेष्टितमिवाध्यक्षेपि नो लक्षित
तत्तेजो विनयादमन्दहृदयानन्दाय वन्दामहे ॥

अथाशिषः ।

कनकनिकषभासा सीतयालिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णाभिरामः ।
अभिनव इव विद्युन्मण्डितो मेघखण्ड
शमयतु मम तापं सर्व्वतो रामचन्द्रः ॥ इत्यादि ।

This is to be differentiated from a work of the same name which, Aufrecht thinks, was composed by Ghasi rama and quoted in his Rasa candra in 1696

---

## 5465

## BRAJA-NĀTHA

### 9773 पद्यतरङ्गिणी । *Padya tarangini*

Substance country made paper 14 × 5½ inches Fol a 10 Lines 11 on a page Extent in slokas 300 Character Nagara Appearance tolerable

An incomplete MS of पद्यतरङ्गिणी, comprising the first eight tarangas, and 51 verses of the ninth Padya-tarangini is an anthology in twelve tarangas It gives a table of contents, which are as follows (1) panegyric on good men, (2) praise of men endowed with good qualities, (3) praise of the learned, (4) praise of Lakṣmī, (5) praise of

*Colophon*:—

इति सूचनिका पत्राणां समाप्ता ।

*Post Colophon*:—

शुभ भूयात् १८७२ ।

## 5469.

## ANONYMOUS.

### 9931. श्लोकसंग्रहः । *Śloka-saṃgrahah.*

Substance, country made paper 9 × 4 inches Folia, 8, the first three leaves and 8, 10, 11, 14, 15 and 16 are missing, (the last leaf is marked 17 which, however, does not complete the MS) Lines, 11 on a page Extent in slokas, 176 Character, Nāgara Appearance, old

This is a collection of miscellaneous verses.

## 5470.

## ANONYMOUS.

### 10234 हरिहरनाममाहात्म्यप्रतिपादकश्लोकावली । *Hari-hara-nāma-māhatmya-pratipādaka-slokāvali.*

Substance, country made paper 10 × 4¼ inches Folia, 25 of which the first is missing Lines, 9 on a page Extent in ślokas 450 Character, Nagara of the eighteenth century Appearance old and discoloured Complete

*Colophon* :—

इत्यग्रेयपुराणोपपुराणस्मृतिसंहितागमीय-हरिहरनाम-

माहात्म्यप्रतिपादकश्लोकावली समाप्ता ।

*End* :—

सकृदुच्चरितं येन हरिनाम चिदात्मकम् ।

फलं नास्य क्षमो वक्तुं सहस्रवदन + + ॥ ३०७ ॥

## 5471.

## ANONYMOUS.

### 10577. *Śloka-samgrahah.*

Substance, country made paper 8½ × 4 inches Folia, 31 Lines, 16 on a page. Character, Nagara of the eighteenth century Appearance, old and worn out Incomplete at the end

*Post Colophon* —

सवत् १८५६ ज्येष्ठ वदि ११ रविवासरे लिखित। रघुनाथ-मालवीयस्येद। साकिम गायघाट प चतुर्थप्रहर दियालगे समाप्त।

---

## 5467.

## ANONYMOUS.

5602 *Four batches of leaves, containing a collection of verses*

Substance palm leaf 12¾ × 1¼ inches Lines 4 on a page Character, Udiya of the early nineteenth century Appearance good

I

The first batch contains 22 leaves which are not numbered The verses are divided into five groups called *Dalas* The 5th dala is, however, not complete

II

The second batch contains nine leaves, numbered up to the 5th leaf

III

Contains 55 leaves These are numbered from one and contain 313 verses

IV

Contains eight leaves marked from the 56th to the 63rd The number of verses is 51

There are eight stray leaves more

## 5468.

7768 सूचनिकापचाणि। *Sūcanika-patrani*

Substance country made paper 12¼ × 6 inches Fol a 4 Character, Nagara Date Samvat 1872 Appearance fresh

An index to a big MS of what appears to be an anthology embracing various subjects, complete in 255 topics

*Colophon*:—

इति सूचनिका पञ्चाशा समाप्ता ।

*Post Colophon*:—

शुभ भूयात् १८७२ ।

## 5469.

## ANONYMOUS.

### 9931. श्लोकसंग्रहः । *Śloka-saṃgrahaḥ.*

Substance, country-made paper 9 × 4 inches Folia, 8, the first three leaves and 8, 10, 11, 14, 15, and 16 are missing, (the last leaf is marked 17 which, however, does not complete the MS ). Lines, 11 on a page Extent in ślokas, 176 Character, Nāgara Appearance, old

This is a collection of miscellaneous verses.

## 5470.

## ANONYMOUS.

### 10234. हरिहरनाममाहात्म्यप्रतिपादकश्लोकावली ।

*Hari-hara-nāma-mahātmya-pratipādaka-ślokāvalī.*

Substance, country made paper 10 × 4½ inches Folia, 25 of which the first is missing Lines, 9 on a page Extent in ślokas, 450 Character, Nāgara of the eighteenth century. Appearance, old and dis-coloured Complete

*Colophon* :—

इत्यशेषपुराणोपपुराणस्मृतिसंहितागमीय-हरिहरनाम-माहात्म्यप्रतिपादकश्लोकावली समाप्ता ।

*End* :—

सकृदुच्चरितं येन हरिनाम चिदात्मकम् ।

फल नास्य क्षमो वक्तुं सहस्रवदन + + ॥ ३०७ ॥

## 5471.

## ANONYMOUS.

### 10577. *Śloka-saṃgrahaḥ.*

Substance, country made paper 8½ × 4 inches Folia, 31 Lines, 16 on a page. Character, Nāgara of the eighteenth century Appearance, old and worn out Incomplete at the end

A collection of ślokas, called (in a later hand) सुभाषितसार—प्रभाकर—on the top of the first leaf

*Beginning* :—

श्रीरुद्रकालेश्वराय नमः ॥
दासेऽहं परिरम्भणानि कितव द्यूते जितानि त्वया
धैर्यं + + यतः क्रतुशतमहोरात्राणि तत्रावधिः ।
इत्युक्तः प्रियया निशादिवसकृज्ज्योतिर्मयाक्षिद्वयं
क्षागुन्मेषनिमेषकोटिघटनाव्यग्रोहरः पातु नः ॥ १ ॥

The poets' names are not given. Nor are the topics noted .

---

## 5472.

## BĀLA-KṚṢṆA.

### 567. विद्वद्भूषणम् सटीकम् ।

*Vidvad-bhūṣaṇam with a commentary.*

For the manuscript see L 1430. The commentary is anonymous.

The author belonged to the Atri-gotra.

A collection of miscellaneous verses with their commentary.

7B, शृङ्गारप्रकरणं, 10A, राजवर्णनम्, 12A, नीतिप्रकरणं, 12B, सदाचारप्रकरणम्, 15B, वैराग्यप्रकरणम्, 17A, चित्रकाव्यप्रकरणम्, 18A, व्याकरणप्रकरणम् ।

---

## 5473.

## KĀŚĪ-NĀTHA.

### 8256. हास्यपञ्चाशिका । *Hāsya-pañcāśikā.*

*By Kāśī-nātha, son of Panduranga.*

Substance, fool-cap paper 8½ × 7 inches Folia, 5 Lines, 13 on a page Extent in ślokas, 100 Character, Nāgara Date, Samvat 1961 Appearance, fresh Complete

*Colophon* :—

इति श्रीपरवोपाख्यपाण्डुरङ्गात्मजकाशीनाथविरचिता हास्य-पञ्चाशिका समाप्ता ।

*Post Colophon* :—

संवत् १९३९ भाद्र शुक्ल २ । हाल संवत् १९६१ कार्त्तिक कृष्ण २ भौमे लिखित रघुनाथमालवीयेन ।

It consists of 55 humorous verses

*Beginning* :—

अथ हास्यपञ्चाशिका लिख्यते ।

जिह्वायाश्छेदिता नास्ति न तालुपतनाद्भयं ।
निर्विशेषेण वक्तव्यं निर्लज्जः को न पण्डितः ॥

*End* :—

रे रे लोकाः कुरुध्वं श्रवणपुटपिधानं द्रुतं हस्तयुग्मै
श्शैलाः सर्वेपि यूयं भवत गुरुतराः सावधाना धरित्र्याः ।
शीघ्रं रे रावण त्वं विरचय वसनैः नासिकाना पिधानं
समोयं कुम्भकर्णः कटुरवविकटं अद्दते दीर्घमुच्चैः ।

---

## 5474.

## ANONYMOUS.

### 9957. *Attributed to Brahmā.*

Substance, country-made paper 9 × 2½ inches Folia, 3 Lines, 5 6, 7 on a page The 3rd leaf is missing Extent in ślokas, 25 Character, Nāgara Appearance, old

The MS. is incomplete with the word तमाकु written on the margin of every leaf. It is a work attributed to Brahmā, denouncing intoxication in general and smoking of tobacco in particular, as the characteristic of the iron age, destroying merits gained in various ways, and degrading man lower than even a Candāla.

*It begins thus* —

ॐ श्रीगणेशाय नम ।

ब्रह्मोवाच ।

घोरे कलियुगे प्राप्ते सर्व्वे वर्णाश्रमा नरा ।
निरयेषु पतिष्यन्ति तमाकूकलिरूपत ॥ १ ॥
उपासते तमाकू वै कलौ नारद ये नरा ।
क्षीणपुण्या पतिष्यन्ति महारौरवसंज्ञिते ॥ २ ॥
अभक्ष्यभक्षणात् पापमगम्यागमनाच्च यत् ।
मद्यपानाच्च यत्पाप तमाकूपानमात्रत ॥ ३ ॥
स्नाता ये च तीर्थानि प्रयागादिषु कोटिश ।
हयान्येव तानि सर्व्वाणि तमाकूपानमात्रत ॥ ४ ॥
पीता येन तमाकू वै नरेण मुनि नारद ।
कृत तेन न सन्देह स्वजन्म म्लेच्छसम्भवम् ॥ ५ ॥
व्रतनियमाश्च सर्व्वे दानानि च महामुने ।
व्यर्थैव तानि सर्व्वाणि तामाकूपानमात्रत ॥ ६ ॥
किञ्च योगेन ध्यानेन देवेन पितृदेवतै ।
किञ्च विज्ञेन मौनेन तमाकूश्चेत पिबेन्नर ॥ ७ ॥
सन्न्यासेन च किं तस्य वैराग्येण च किं पुन ।
पीता येन तमाकू वै श्वपचादधिकोऽपि स ॥ ८ ॥
ब्रह्मचर्य्येण किन्तस्य गार्हस्थ्येनापि किं पुन ।
वानप्रस्थेन किं तस्य सन्न्यासेनापि किं पुन ॥ ९ ॥
यस्तु तमाकू पिबति स्वाश्रमान्निरये पतेत ।
नारदात्र न सन्देहो सत्य सत्य मयोदित ॥ १० ॥
ब्राह्मण क्षत्रियो वैश्य शूद्रश्च मुनिसत्तम ।
श्वपचै सदृशा ज्ञेया तमाकूपानमात्रत ॥ ११ ॥
गृहस्था नैव ते विप्र नैव ते ब्रह्मचारिण ।
वानप्रस्था न ते ज्ञेया यतयो न भवन्ति तु ॥ १२ ॥
धर्म्मभ्रष्टा हि ते ज्ञेयास्तमाकूपानमात्रत ।
पचन्ति नरके घोरे नरके नात्र संशय ॥ १३ ॥

तमाकू-भाङ्ग-मद्यानि ये पिबन्ति नराधमा॰ ।
तेषां हि नरके घोरे यावदिन्द्राश्चतुर्दश ॥ १४ ॥

This is a modern work in pigeon-Sanskrit.

---

5475.

## ANONYMOUS.

### 3658. *A collection of verses*

Substance, country made paper 12¾ × 3 inches Folia, 6 Lines, 5 on a page Character, Bengali of the eighteenth century Appearance, discoloured

*Beginning*:—

ॐ नमो भगवते वासुदेवाय

अह्रो बकीय स्तनकालकूटं जिघांसयापाययदप्यसाध्वी ।

लेभे गतिं धात्र्युचितां ततो+ + + + + + + + +

*End*:—

यन्नामस्मरणादशेषकलुषं नाशं प्रयाति द्रुत

यज्ज्ञानेन विनष्टकर्म्मनिचया निर्वाणमालेभिरे ।

यस्य श्रीचरणाब्जसम्भवनदी गङ्गा जगत्पावनी

स त्वां पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरि ॥

## V. NĪTI.

### 5476.

### ŚUKRĀCĀRYYA.

9718. शुक्रनीतिः । *Sukra-nitih.*

Substance, country made paper 11 × 4½ inches Folia, 231 Lines, 7 on a page Extent in ślokas, 4 600 Character, Nāgara Date, Samvat 1928 Appearance, fresh

The elements of polity.

Printed in Calcutta and elsewhere It is said that the present recension of Śukra-niti was composed by Panditas at the Court of Ahalya Bāi of the Holkar family (1770–1790) on an old basis

### 5477.

912 *Śukra-nitih and Kamandakīya-nītih.*

A manuscript bound in book-form, containing (I) Śukra-nitih and (II) Kamandakiya-nitih. They are noticed in L 1828 and 1829.

---

### 5478.

### CĀṆAKYA.

5656 चाणक्यश्लोकः । *Cānakya-ślokah.*

Substance, palm leaf 7 × 2 inches Folia, 1-47 of which the 4th, 6th, 8th, 12th to 15th and 24th to 46th are missing Lines, 5 on a page Character, Newari of the fifteenth century Appearance, old and worn out

*Beginning* :—

प्रणम्य शिरसा विष्णु त्रैलोक्याधिपतिं प्रभुं ।

नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ॥

*Post Colophon* :—

+ + + + + + + + + + + + + + + दर्योऽसौ ।
नेपालखण्डेश्वर-मिह्रिरकुलसम्भवोऽमितप्रताप
श्रीमान् श्रीरायमल्लस्तदनुजगुणवान् भूपश्रीरत्नमल्ल ।
तद्भ्राता प्रचुरन्ना रणमल्लविदितो भागिनेयोऽस्ति तेषा
श्रीमान् श्रीभीममल्लो मदनतनुसमो भान्ति एते नृपेन्द्रा ।

एते(?) नृपाणां विजयराज्ये :—

वनिजकुलसुधीरो लुंगुनामाभिधेय
सुरद्विजगुरुभक्त सर्व्वनीत्या समेत ।
युवतिहृदयसोभो मन्मथस्तुल्यरूप
सकलगुणनिधान सर्व्वलोकैकवन्धु ॥

अतश्च—

यथा गौरे च चौरे च राजहंसे(?) परिस्थिते ।
लुंगुनाम्ना तथा रत्न परिस्थिते च सर्व्वदा ॥
तत्पुत्रो रत्नसिंहश्च शास्त्रनिरत सर्व्वदा ।
तस्यार्थे लिखित चैव चानक्य सा + + + + ॥

## 5479.

### 8550. *Canakya-slokah*

Substance, country made paper 12½ × 4½ inches Folia 13 Lines, 10 on a page Extent in ślokas, 390 Character, Nāgara Date Samvat 1887 Appearance, fresh

Complete in 13 leaves and 67 verses

Copied in Samvat 1887. By Madhava Brahmana at Benares.

*Post Colophon* :—

सवत् १८८७का मार्गशीर्ष शुक्ल षष्टिम्या तिथो रविवारे सूर्य्य-
उत्तरायणे लिखित माधवब्राह्मणेन काशिपुरिमे । शुभमस्तु ।

*Beginning* :—

एकदन्त महाकाय नमस्ते पद्मपाणये ।
सिद्धंति सर्वकार्याणि त्वत्प्रसादात् विनायक ॥

*The last verse runs* :—

पञ्चाशत् पञ्चवर्षाणि सप्त मासा दिनत्रयम् ।
भोजराजेन भोक्तव्य सगौडं दक्षिणापथम् ॥

## 5480.

### 6751. चाणक्यम् (लघु वृद्धञ्च)।

### *Cānakyam.* (*Laghu and Vrddha.*)

Substance, country made paper 10¼ × 5 inches Folia, 8—two sets of leaves, I 1-3, II 3-7 Lines, 15, 16 on a page Character, Nāgara of the eighteenth century Appearance, old and soiled

I.

These leaves contain hygienic rules.

*Beginning* :—

गोपालबालैः सह मल्लविद्या-
विनोददक्षं धृतकाकपक्षम् ।
उपास्महे वाङ्मनसातिदूरं
महः परं नीलरुचिं+नीलम् ॥ १ ॥
वाते ऽनुपान स्निग्धोष्ण वत्तोष्ण श्लेष्मणि स्मृतं ।
पित्ते स्निग्धहितं स्वेहं पाने तोये सुशीतलम् ॥ २ ॥ etc., etc.

II

A

3A, लघुचाणक्ये राजनीतिशास्त्रे सप्तमोऽध्यायः; 3B, लघुचाणक्ये राजनीतिशास्त्रेऽष्टमोऽध्याय· ।

B.

Then follows Vrddha Canakya.

*Last Colophon:—*

इति वृद्धचाणक्ये राजनीतिशास्त्रेऽष्टमोऽध्याय ।

It agrees with Oxf. 131B and is a work different from Vrddha Cānakya, as described in W. 1590

## 5481.

4169. **वृद्धचाणक्यम् ।** *Vrddha-cānakyam*

*With an interlineal commentary in Maru-Bhasa.*

Substance country made paper 11 × 5 inches Folia, 19 Character, Jaina Nāgara Date Samvat 1853 Appearance, fresh Complete

*Colophon —*

इति श्रीवृद्धिचाणक्ये राजनीतिशास्त्रे अष्टमोऽध्याय ८ समाप्तोऽय राजनीतिग्रन्थ ।

*Post Colophon —*

श्लोकसंख्या २७५ ज्ञेया सवत् १८५३ वर्षे सितौ ज्येष्ठ वद्यौ अष्टम्या ८ तिथौ सोमे लिखितम् ऋषिणा आनन्दचन्द्रेण। लिखित श्रीनागोरनगरमध्ये।

*Colophon of the commentary —*

इति श्रीवृद्धचाणक्यनामा राजनीतिशास्त्रनै विषै। आटमो ऽध्यायार्थ सहित पुरोऊवो ८ सपूर्ण एयथो। राजनीतिग्रन्थ इहा सूत्र १६ चाणक्य-नीग्रथ सूत्रार्थ सपूर्ण ऊवौ।

*Post Colophon:—*

सवत् १८५३ वर्षे ज्येष्ठ वदि द्वादश्या १२ तिथौ गुरौ वासरे लिखित परमानन्दे मुनिना श्रीमन्नागोरनगर मध्ये। कल्याणमस्तु सुख भवतु सर्व्वदा श्रीरस्तुतरा जयतितराम् ॥

*Beginning·—*

प्रणम्य शङ्कर देव ब्रह्मायाद्य जगद्गुरुम्।
विष्णुं प्रणम्य शिरसा वक्ष्यामि शास्त्रमुत्तमम ॥

चाणक्येन स्वयं प्रोक्तं नीतिशास्त्र-समुच्चयम् ।
तदहं सम्प्रवक्ष्यामि नराणां बुद्धिवर्द्धनम् ॥
अतोर्थं पठ्यते शास्त्रे कीर्त्तिर्लोकेषु जायते ।
कीर्त्तिमान् पूज्यते लोकः परत्रेह च मानवः ।

*End* :—

दानं दारिद्र्यनाशाय शीलं दुर्गति-नाशनम् ।
तपः कर्म्मविनाशाय भावना भवनाशिनी ॥
नास्ति वेदात् परो धर्म्मो नास्ति मातृसमो गुरुः ।
न च दानात् परमिष्टमिह लोके परत्र च ॥

## 5482.

9629. *Vrddha-cānakyam.*

Substance, country made paper. 11 × 5 inches Folia, 9 Lines, 9 on a page Extent in ślokas, 144 Character, Nāgara Date, Samvat 1781. Appearance, decayed Complete

*Colophon* :—

इति श्रीवृद्धचाणक्ये राजनीतिशास्त्रे अष्टमोऽध्यायः समाप्तः ।

*Post Colophon* :—

शुभमस्तु संवत् १७८१ माघसुदी प्रतिपद चान्द्रवासरे का लिखित ।

## 5483.

9358. *Cānakyam.*

Substance, country made paper 10 × 4 inches Folia, 10 Lines, 10 on a page Extent in ślokas, 260 Character, Nāgara Date, 1870. Appearance, tolerable Complete

This codex contains both the Laghu-cānakya and the Vrddha-cānakya, the former ending in leaf 5A, and the latter in leaf 10. Each of them is complete in eight chapters.

*Beginning of Laghu-canakya* —

श्रीगणेशाय नम ।

प्रणम्य शङ्कर देवं ब्रह्माणञ्च जगद्गुरुम् ।
विष्णुं प्रणम्य शिरसा वक्ष्यामि शास्त्रमुत्तमम् ॥ १ ॥
चाणक्येन स्वय प्रोक्त नीतिशास्त्र-समुच्चयम् ।
तदहं सम्प्रवक्ष्यामि नराणा बुद्धिवर्द्धनम् ॥ २ ॥
यतोऽर्थं पठत (पठितो) शास्त्रे कीर्त्तिर्लोकेषु जायते ।
कीर्त्तिरा(मा)भुज्यते लोके परत्रेह च मानव ॥ ३ ॥

*End* :—

पुराकृत यल्लभते मनुष्य कि कारण देवमलङ्घनीयम् ।
तस्माद्र शोचामि न विस्मयो मे यदस्मदीय नहि तत्परेषाम् ॥८॥
वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्व्वतमस्तके वा ।
सुप्त प्रमत्त विषमस्थित वा रक्षन्ति पुण्यानि पुराकृतानि ॥ ६ ॥

5A, *Colophon* —

इति श्रीलघुचाणक्ये नीतिशास्त्रे अष्टमोऽध्याय ।
समाप्तोय लघुचाणिक्य ।

*Beginning of Vṛddha-cānakya* —

प्रणम्य शिरसा विष्णुं त्रैलोक्याधिपतिं प्रभुम ।
नानाशास्त्रोद्धृत वक्ष्ये राजनीति-समुच्चयम् ॥ १ ॥
तदहं सम्प्रवक्ष्यामि नराणा हितकाम्यया ।
यत विज्ञानमात्रेण सर्व्वज्ञत्व प्रजायते ॥ २ ॥

*End* —

सुखस्यानन्तर दुःख दु खस्यानन्तर सुख
\+ + + + चक्रवत परिवर्त्तते ॥ १० ॥
येषा न विद्या न तपो न दानं
न चापि शील न गुणो न धर्म्म ।
ते मृत्युलोके भरभारभूताः
मनुष्यरूपेण मृगाश्चरन्ति ॥ १५ ॥

*Colophon* :—

इति श्रीवृद्धचाणक्ये नीतिशास्त्रे अष्टमोऽध्यायः ।

*Post Colophon* :—

सम्पूर्णं संवत् १८७० धन्न । १ ॥ गहू । १ । ज्वा । १ । ५ ॥
उर्द । ४ ॥ तेल । २ । घीव । ६ । गुड । ३ ॥
श्री ॐ गणेशाय नमः ।

## 5484.

### 9154. चाणक्यनीतिसंग्रहः । *Cāṇakya-nīti-saṃgrahaḥ.*

Substance, country-made paper. 12½ × 6 inches Folia, 2 Lines, 16 on a page Extent in ślokas, 100 Character, Nāgara Appearance, tolerable Incomplete.

There are 81 verses.

---

## 5485.

## CĀṆAKYA AND OTHERS.

### 9883. दृष्टान्तशतकम् । *Dṛṣṭānta-śatakam.*

Substance, country made paper. 14 × 6 inches Folia, 3 Lines, 18 on a page. Extent in ślokas, 270. Character, Nāgara Appearance, tolerable.

This codex contains (1) दृष्टान्तशतक by Kusuma-deva, printed in Haberlin, p. 217, (2) चाणक्यशतक, well-known and often printed, and (3) नीतिप्रदीप attributed to Vetāla Bhaṭṭa, printed in Haberlin, p 526.

## 5486.

### 10723 D. *Cāṇakyam.*

Substance, palm leaf 8½ × 1⅞ inches Folia, 51, of which the 3rd, 5th to 7th, 8th, 9th, 12th, 13th, 22nd, 24th to 30th, 32nd to 35th, 38th, 39th, 41st, 42nd, 44th, 46th, 48th, 49th are missing Lines, 4 on a page. Character, Newari Appearance, soiled

*Last Colophon* :—

इति चाणक्यनामब्राह्मणमहापण्डितकृतः सर्व्वसारसंग्रहकृत्
राजनीत्यादि-वाणिक्यपुस्तकं समाप्तः ।

*Post Colophon* :—

स्वस्ति विजयच्छटोल्कोधिवाश्विने। कुलपुत्र गुरुदेवता मया भक्ति। यथाभारो सनीतिशिद्यार्थेण लिनं। श्वारणी ममधिवाश्विने कास्य भयद्दर्ज्जलाम्ने व्यग्रभावेन लिखितं॥ पुस्तक च॥

यादृष्टं, etc.

*Beginning* :—

ॐ नम' सर्व्वज्ञाय।

प्रणम्य शिरसा विष्णुं त्रैलोक्याधिपतिं प्रभुं।

नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम्॥

With it there is a leaf marked 21

*It begins* :—

लिखितं मया॥ यदि शुद्धमशुद्धं वा, etc., etc.

.. ... ... ... ...

सम्वत्सर ऋतु दिग् वाणयुक्तैरुसप्तमी।

शुक्लपच्च रवेर्व्वारे लेख सिद्धिकृते शुभ॥

श्रेयोस्तु सम्वत् ५१६ जेष्ठ शुक्लसप्तमी आदीतवासरे सिद्धिदिनं॥

स्वस्ति' श्रीमहाराजाधिराज परमेश्वर-परम[क]दयाक-श्रीमानेश्वरीवरलब्धप्रसादमहाप्रतापवान्। श्रीराज्यश्रीश्रीजयधर्म्ममल्लदेवस्य विजयराज्ये तस्यानुजश्रीश्रीजयज्योतिमल्ल-कनेष्ठजयकीर्त्तिमल्लदेवत्रय-महानुभावप्रीतियुक्तानेन श्रीनेपालमण्डलसमस्तधर्म्ममार्गेण पुत्रवत् प्रतिपालिता॥

शुभमस्तु सर्व्वजगता, *etc. etc.*

## 5487.

### 5243. चाणक्यशतकम्। *Cānakya-śatakam*

Substance, country made paper 10×4 inches Two batches of leaves, one marked 1-4 and 7-14 and the other marked 4 6 Lines, 6 on a page Character, Bengali of the eighteenth century Appearance, very old

The first batch of leaves marked 1–4 and 7–14 contain "*Cānakya-sataka*"

इति चाणक्येर अष्टोत्तरशत-श्लोक समाप्त ।

The second batch contains another collection of verses marked 22–47

---

## 5488.

## KĀMANDAKA.

### 890 कामन्दकीयनीतिसारः सटीकः ।

*Kamandakiya niti sarah with a commentary*

Substance country made paper 11¾ × 7 inches Fol a, 106 Lines 12 on a page Extent in ślokas 3 150 Character Nāgara Appearance tolerable

The manuscript is a defective one It begins from the 6th Sarga

3B, इति श्रीकामन्दकीये नीतिसारटीकाया कण्टकशोधनो नाम षष्ठ सर्ग ।

The manuscript continues to the 14th Sarga, ending in leaf 68A The next colophon found is that of the 19th Sarga in leaf 99B

*It runs thus* —

इति श्रीसेनापतिप्रचारप्रयाणव्यसनरक्षणकूटयुद्धविकल्पाख्याप कोनविंश सर्ग ।

*The last colophon in leaf* 106 —

इति श्रीकामन्दकीय नीतिसारटीकाया उपाध्यायनिरपेक्षाया गजाश्वरथपत्तीना कर्म्मणा भूमीना दानविकल्पनानां व्यूहरचनाना निर्देशो विंश सर्ग ।

But in L 1829 the last colophon is numbered 19th

The text has been published in the Bibliotheca Indica

For the commentary see I O Catal No 3992

The last colophon describes the ṭīkā as उपाध्यायनिरपेक्षा or dispensing with the need of a teacher's help, and in I O. Catal , too, it is so designated

## 5489.

4742. *Kāmandakīya-nīti-sārah.*

Substance, palm leaf 11 × 2 inches Folia, 1-39, of which the following leaves are missing · 2, 14, 21, 26, and 38 Lines, 5 on a page Character, Newari of the fourteenth century Appearance, old and worn out Incomplete at the end

34B, कामन्दकीये नीतिसारे मण्डलयोनिर्मण्डलचरितं चाष्टमः सर्गः समाप्त ।

The ninth chapter comes abruptly to an end.

---

## 5490.

## VARA-RUCI.

9373. नीतिरत्नम् । *Nīti-ratnam.*

Substance, country made paper 10 × 4 inches Folium, 1 Lines, 12 on a page Extent in ślokas, 15 Character, Nāgara Appearance, fresh *Complete*

Printed in Häberlin, p 502

## 5491.

8460. *Nīti-ratnam.*

Substance, country made paper 9 × 3½ inches Folia, 3 Lines, 8 on a page Character, modern Nāgara Appearance, fresh Complete

*Colophon :—*

इति श्रीमद्वाकवित्ररत्नचिविरचित नीतिरत्नं सम्पूर्णम् ।

*Post Colophon :—*

सं० १८६१ पौ० क्ष २० गु० लि० रघनाथ-मालवीय काश्यां ।

---

## 5492.

## ANONYMOUS.

### 8473. राक्षसशतकम् । *Rākṣasa-śatakam.*

Substance, country made paper 10×4 inches Folia, 3 Lines, 14 on a page Character, Nāgara of the eighteenth century Appearance, dis coloured Incomplete at the end

*Beginning*:—

त्रयीयुवतिसीमन्तसीमासिन्दूरबिन्दवः ।
संसाराब्धिं पिबेयु र्वः कंसारेः पादपांसवः ॥
गुणदोषौ बुधो गृह्णन् इन्दुक्ष्वेडौ यथेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥

A century of verses on piety and morality, of which this incomplete MS. contains 88 only.

---

## 5493.

## GHAṬA-KARPARA.

### 5630G. नीतिसारम् (दृष्टान्तशतकम्) ।

*Nīti-sāram here called Drstānta-śatakam*

Substance, palm leaf 13½×1½ inches Folia, beginning in 20B and ending in 21B. Lines, 6, 7 on a page Character, Udiyā of the eighteenth century Appearance, old and worm eaten.

See Kāvya-samgraha, Vol. I.

*Beginning*:—

वने मयूरा गगनेषु मेघा
लक्षान्तरे भानु जलेषु पद्मम् ।
इन्दुर्द्विलक्षे कुमुदस्य तोये
या यस्य प्रीतिर्नहि तस्य दूरम् ।

There are 22 verses This is followed by six leaves, containing verses from Megha-dūta, Mahā-nāṭaka and so on.

## 5494

### 8351 *Nīti sārah*

Substance country made paper 6 × 4½ inches Folia 3 Lines 11 on a page. Character modern Nāgara Date Samvat 1961 Appearance fresh Complete

*Colophon* —

इति महाकविघटकर्परविरचित नीतिसार समाप्तम ।

*Post Colophon* —

सवत १९६१ पौ० सु० ३ र लि रघुनाथमालवीय काश्या गौघट्ट ।

*Beginning* —

गिरौ कलापो गगन पयोदा

लक्षान्तरेर्कश्च जलेषु पद्मा ।

इन्दुर्दिलक्ष्य कुमुदस्य बन्धु

यो यस्य मित्र नहि तस्य दूरम् ॥

There are 21 slokas Printed in Haberlin, p 504

---

## 5495.

## VETĀLA BHAṬṬA

### 8461 नीतिप्रदीप. । *Nīti pradīpah*

Substance country made paper 9 × 4 inches Folia 3 Lines 8 on a page Character modern Nagara Appearance fresh Complete

*Colophon* —

इति श्रीमहाकविवेतालभट्टविरचित नीतिप्रदीपकाव्य समाप्तम ॥

*Post Colophon* —

स० १९६१ पौ० शु० ३० गु० लिखित रघुनाथराम मालवीयेन

काश्या ।

*Beginning*:—

रत्नाकरः किं कुरुते स्वरत्नै
विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैः मलयाचलः किं
परोपकाराय सतां विभूतिः ॥

Printed in Haberlin, p 526.

---

## 5496.

## ANONYMOUS.

### 10723 B. कुशोपदेशः (नीतिसारः)।

*Kuśopadeśah (Nīti-sārah).*

Substance, palm leaf 8 x 2 inches Folia, 6 (by counting) Lines, 4 on a page Character, Newari of the seventeenth century. Appearance, soiled

It consists of three *astakas,* containing lessons on worldly wisdom.

The first leaf is marked 7; the 2nd 35; 3rd 38; 4th 42; 5th 52; 6th 66, although they are in consecutive order, and one reads into the other.

The leaf 7 begins with a verse marked 6.

I

7B, इति कुशोपदेशे नीतिसारे अङ्गदकुमारश्लोकाष्टक समाप्तः।

The next leaf is faded.

II.

38B, इति कुशोपदेशे नीतिसारे सुग्रीववानराधिपश्लोकाष्टक समाप्तं।

III.

*Beginning* :—

शुष्केन्धने वह्निरूपैति वृद्धि
बालेषु मौक (?) चपलेषु कोपः ।

